विशिष्य तान्येवाह—

**कण्ठात्षड्जः ॥ १९ ॥**

कण्ठस्थानात्षड्जः स्वरोऽभिव्यज्यते ॥ १९ ॥

**शिरस ऋषभः ॥ २० ॥**

शिरःस्थानादृषभोऽभिव्यज्यते ॥ २० ॥

**नासिकाया गान्धारः ॥ २१ ॥**

नासिकास्थानाद्गान्धारोऽभिव्यज्यते ॥ २१ ॥

**उरसो मध्यमः ॥ २२ ॥**

उरःस्थानान्मध्यमोऽभिव्यज्यते ॥ २२ ॥

**उरसः शिरसः कण्ठाच्च पञ्चमः ॥ २३ ॥**

उरःशिरःकण्ठेतिस्थानत्रयात्पञ्चमोऽभिव्यज्यते ॥ २३ ॥

**धैवतो ललाटात् ॥ २४ ॥**

ललाटस्थानाद्धैवतोऽभिव्यज्यते ॥ २४ ॥

**निषादः सर्वत इति ॥ २५ ॥**

निषादः स्वरस्तु—कण्ठादिसर्वस्थानादभिव्यज्यते । इतिशब्दः सामस्वरप्रकरणसमाप्तिज्ञापनार्थः[1] ॥ २५ ॥

प्रसंगात्तैत्तिरीय ब्राह्मणस्वरमाह—

**मन्त्रस्वरवद्ब्राह्मणस्वरश्चरकाणाम् ॥ २६ ॥**

चरकाणां[2] ब्राह्मणस्वरो मन्त्रेण तुल्यो भवति ॥ २६ ॥

तेषामेव विशेषमाह—

**तेषां खाण्डिकेयौखेयानां चातुःस्वर्यमपि क्वचित् ॥ २७ ॥**

तेषां चरकाणां मध्ये खाण्डिकेयानामौखेयानां[3] च ब्राह्मणे चत्वारः स्वरा उदात्तानुदात्तस्वरितप्रचिताख्या भवन्ति । क्वचिद्ग्रहणात्त्रैस्वर्यमपि । अत्र चत्वारः स्वराः समाहृता इति चातुःस्वर्यमिति विग्रहः ॥ २७ ॥

तदन्यशाखिनां ब्राह्मणस्वरमाह—

**तानोऽन्येषां ब्राह्मणस्वरः ॥ २८ ॥**

अन्येषामुक्तव्यतिरिक्तशाखिनामाश्वलायनादीनां[4] तानो ब्राह्मणस्वरो भवति । तान एकश्रुतिरित्यर्थः ॥ २८ ॥

अथाङ्गोपाङ्गानां स्वरमाह—

**तान एवाङ्गोपाङ्गानां तान एवाङ्गोपाङ्गानामिति ॥ २९ ॥**

इति श्रीभगवतः कात्यायनस्य कृतौ भाषिकपरिशिष्टसूत्रे तृतीया कण्डिका परिसमाप्ता ॥ [ ३ ]

इति श्रीमन्महर्षिकात्यायनप्रणीतं भाषिकपरिशिष्टं सूत्रं परिसमाप्तम् ॥

---

१—इतिकरणमधिकारोपसंहारार्थं, न तु चरमत्वद्योतनार्थम् । तथा यदत्राविहितं लक्षणमुदाहरणं लक्ष्यं च तच्छाखान्तरीय-भाषिकशास्त्रपाणिनीयादिशास्त्रेभ्योऽवगन्तव्यम् ॥ २—चरकाः कृष्णयजुर्वेदे ॥ ३—खाण्डिकेया औखेयाश्चापि कृष्णयजुर्वेदिन एवेति ॥ ४—अश्वलायनादिशब्देन शाकलबाष्कलाद्या ग्राह्याः । तेषामैतरेयशांखायनब्राह्मणादौ तादृक्तानस्वरानुभवः सर्वैरनुभूयते ॥

शिक्षा कल्पो व्याकरणं नैरुक्तं छन्दो ज्यौतिषमिति षडङ्गानि । प्रतिपदमनुपदं छन्दो भाषा धर्मो मं. न्यायस्तर्क इत्युपाङ्गानि । तेषामङ्गोपाङ्गानां तान एव तानस्वर एव भवति । द्विरभ्यासः शास्त्रपरिसमाप्त्यर्थ. इतिशब्दः शास्त्रवेदिनामभ्युदयसूचनार्थः ॥ २९ ॥

## तदत्रैते श्लोका भवन्ति ।

उदात्तः स्वर्यते नीचो नीच उच्चस्वरो भवेत् ।
ब्राह्मणस्य स्वरो ह्येष ज्ञायते वेदपारगैः ॥ १ ॥
ऋषिप्रोक्त्यनुसारेण स्वरं ज्ञात्वा द्विजः पठेत् ।
स वेदफलमाप्नोति ह्यन्यथा नरकं व्रजेत् ॥ २ ॥
एकं तु ब्राह्मणं सम्यक्स्वरार्थज्ञानपूर्वकम् ।
योऽधीते वेदवित्स स्यादन्यथा स्थाणुरुच्यते ॥ ३ ॥
अम्बा भागीरथी यस्य नागदेवः पिता सुधीः ।
तेनानन्तेन विवृतं भाषिकं सूत्रमुत्तमम् ॥ ४ ॥
अनेन प्रीयतां देवो रमानाथः सदा मम ।
ब्रह्मादिवन्दितपदो देवदेवशिखामणिः ॥ ५ ॥
वचनप्रसूनमाला याऽनन्ताख्येन सूरिणा रचिता ।
ध्रियतां हृदये सदये कमलामहिलेन पुरुषेण ॥ ६ ॥

इति श्रीकण्वशाखिनागदेवसुतश्रीमदनन्तदेवविरचिते भाषिकपरिशिष्टसूत्रभाष्ये तृतीया कण्डिका परिसमाप्ता ॥

## इति श्रीमदनन्तदेवीयं भाषिकपरिशिष्टसूत्रभाष्यं परिसमाप्तमभूत् ॥

---

१–अत एव श्रीमत्कात्यायनप्रणीतमुख्यपरिशिष्टभूतसर्वसूत्रेषु तानस्वरपाठो बाध्यः ॥

२–संहितायां यः स्वर उदात्तः स ब्राह्मणेऽनुदात्तो भवति । यश्चानुदात्तः संहितायां स ब्राह्मणे उदात्तो भवतीति प्राचीनं तात्पर्यमिति भावः ।

३–वेदफलं वेदपाठजन्यं फलमित्यर्थः ।





१४४०